॥ अर्हम् ॥

यशोविजयोपाध्यायविरचितं

## शत्रुञ्जयमण्डनश्रीऋषभदेवस्तवनम् ।

आदिजिनं वन्दे गुणसदनं, सदनन्तामलबोधम् ।
बोधकतागुणविस्तृतकीर्त्तिं, कीर्तितपथमविरोधम् ॥ आदि० ॥ १ ॥
रोधरहितविस्फुरदुपयोगं, योगं दधतमभङ्गम् ।
भङ्गनयव्रजपेशलवाचं, वाचंयमसुखसङ्गम् ॥ आदि० ॥ २ ॥
सङ्गतपदशुचिवचनतरङ्गं, रङ्गं जगति ददानम् ।
दानसुरद्रुममञ्जुलहृदयं, हृदयङ्गमगुणभानम् ॥ आदि० ॥ ३ ॥
भानन्दितसुरवरपुन्नागं, नागरमानसहंसम् ।
हंसगतिं पञ्चमगतिवासं, वासवविहिताशंसम् ॥ आदि० ॥ ४ ॥
शंसन्तं नयवचनमनवमं, नवमङ्गलदातारम् ।
तारस्वरमघघनपवमानं, मानसुभटजेतारम् ॥ आदि० ॥ ५ ॥

इत्थं स्तुतः प्रथमतीर्थपतिः प्रमोदा-
च्छ्रीमद्यशोविजयवाचकपुङ्गवेन ।
श्रीपुण्डरीकगिरिराजविराजमानो,
मानोन्मुखानि वितनोतु सतां सुखानि ॥ ६ ॥

॥ समाप्तमिदं श्रीऋषभदेवस्तवनम् ॥

